# श्रीहनुमत्सूक्तम्

श्रीमन्तो सर्वलक्षणसम्पन्नो जयप्रदः

सर्वाभरणभूषित उदारो महोन्नतोष्ट्रारूढः

केसरीप्रियनन्दनो वायुतनूजो यथेच्छं पम्पातीरविहारी

गन्धमादनसञ्चारी हेमप्राकाराञ्चितकनककदलीवनान्तरनिवासी

परमात्मा वनेचरशापविमोचनो

हेमकनकवर्णो नानारत्नखचिताममूल्यां मेखलां च स्वर्णोपवीतं

कौशेयवस्त्रं च बिभ्राणः सनातनो परमपुरषो

महाबलो अप्रमेयप्रतापशाली रजितवर्णः

शुद्धस्पटिकसङ्काशः पञ्चवदनः

पञ्चदशनेत्रस्सकलदिव्यास्त्रधारी

श्रीसुवर्चलारमणो महेन्द्राद्यष्टदिक्पालक-

त्रयस्त्रिंशद्गीर्वाणमुनिगणगन्धर्वयक्षकिन्नरपन्नगासुरपूजित

पादपद्मयुगलः नानावर्णः कामरूपः

कामचारी योगिध्येयः श्रीहनुमान्

आञ्जनेयः विराट्रूपी विश्वात्मा विश्वरूपः

पवननन्दनः पार्वतीपुत्रः

ईश्वरतनूजः सकलमनोरथान्नो ददातु।

इदं श्रीहनुमत्सूक्तं यो धीमानेकवारं पठेद्यदि

सर्वेभ्यः पापेभ्यो विमुक्तो भूयात् ।